# द्विगुसमासः।

1. ** ( ) सू - <सङ्ख्यापुर्वो द्विगुः>
अर्थः – द्विगुसमासे आदौ सङ्ख्या एव वर्तते। सङ्ख्यावाचि शब्दः सुबन्तेन सह समस्यते। [**पूर्वतन कस्यचन सूत्रस्य अर्थः - दिग्वाची, सङ्ख्यावाची च सुबन्तेन समस्यते इति दृश्यते एव। परन्तु दिग्वाचिशब्दः द्विगुसमासे नान्तर्भूतः। अतः सः त्यक्तव्यः]

** (२-४-१) सू - <द्विगुरेकवचनम्>

अर्थः -द्विगुः एकवचनान्तः भवति।

2. ** (२-१-५१) सू - <तद्धितार्थोत्तरपदसमाहारे च>
-- अर्थः :-- तद्धितार्थविषये, उत्तरपदे, समाहारे चैव सङ्ख्यावाचकशब्दः सुबन्तेन समस्यते। पूर्णार्थः अधः वर्णितः।
विवरणम् – द्विगुसमासः त्रिविधेषु वर्तते। --
(अ) तद्धितार्थद्विगुः । (आ). उत्तरपदपरद्विगुः। (इ). समाहारद्विगुः - इति।

(अ) तद्धितार्थद्विगुः। -- अत्र तद्धितार्थे एव सङ्ख्यावाचकं सुबन्तेन समस्यते, द्विगुसमासः च भवितुमर्हति, अन्यथा न।
उदा-(१) षण्णां मातृणाम् अपत्यम् → षाण्मातुरः।
(२) द्वयोः मात्रोः अपत्यम् → द्वैमातुरः।
(३) पञ्चसु कपालेषु संस्कृतः → पञ्चकपालः।(पुरोढाशः)

उदा – (१) षण्णां (सङ्ख्या) मातृणाम् (सुबन्तम्) अपत्यम् +अण् (प्रत्ययः) → षाण्मातुरः ।
षड् – सङ्ख्या। मातृ –(प्रा.प) = षाण्मातृ + अ (आदिवृद्धिः + अण्) +आतुरः इति आदेशः = षाण्मातुरः।
* -अत्र द्विगुः कुत्र दृश्यते इति प्रश्नः। [षड्+ मातृ → अत्रैव समासः भवति चेदपि, पुनः 'अ' प्रत्ययस्य संयोगेनैव समासस्य अर्थस्य च पूर्णता भवति।]
* अपत्यार्थे यदा तद्धितप्रत्ययः प्रयुक्तः, तदा एव द्विगुः भवति। तद्धितार्थे एव सङ्ख्यावाचि सुबन्तेन समस्यते इति निर्णयः। अत एव तद्धितार्थद्विगुः इति नाम।
** अत्र षाण्मातुरः इत्यस्य "कार्तिकेयः" इति अर्थः भवति चेदेव तद्धितार्थः सूच्यते। तदा एव समासः।
** "षट् + मातरः" इति अर्थः भवति चेत् केवलं 'षट् मातरः' इति अर्थः। संज्ञा नास्ति,समासोऽपि नास्ति।
(३) पञ्चसु कपालेषु संस्कृतः → पञ्चकपालः→ अत्र तद्धितप्रत्ययस्य लोपः अस्ति एव। परन्तु तद्धितार्थः अस्ति इति द्विगुसमासः भवति। अत्र तद्धितप्रत्ययस्य मुख्यत्वं नास्ति, अर्थस्य एव। तद्धितार्थः विवक्षितः चेत् समासोऽपि भवितुमर्हति। अतः "तद्धितार्थविषये" इत्येतस्य मुख्यत्वं भवति।

(आ). उत्तरपदद्विगुः। -- उत्तरपदे परतः (एव) सङ्ख्यावाचकं सुबन्तेन सह समस्यते।
उदा – पञ्च गावः धनं यस्य सः → पञ्चगवधनः। -- अत्र तु प्रथमं द्विगुः, पश्चात् बहुव्रीहिः। [पञ्च (सङ्ख्या) +जस्, गो+जस् (सुबन्तम्), धन+स् (उत्तरपदम्) ]
पञ + गो → द्विगुत्वम्। धनं यस्य सः = बहुव्रीहित्वम्। संयुज्य द्विगुगर्भबहुव्रीहिः इत्युच्यते।
** <गोः अतद्धित लुटि> इति सूत्रानुसारं द्विगुसमासस्य कारणात् – पञ्च + गो + 'टच्' प्रत्ययः (अ) = पञ्चगवः । पश्चात् (धन+ टच्)
अनन्तरं बहुव्रीहिः – पञ्च गवः धनं यस्य सः = पञ्चगवधनः।

उदा – (आ) – पञ्च सखायः प्रियाः यस्य सः → पञ्चसखप्रियः।
अत्र – पञ्च (सङ्ख्या) + सखि (सुबन्तम्) प्रियः (उत्तरपदम्)
पञ्च + सखि = पञ्चसखः (इ-लोपः, अ-आदेशः) [सू-<राजाह----टच्>]

उदा – पञ्चानां कपालानां समाहारः → पञ्चकपालः।

(इ)समाहारद्विगुः ।

3. ** (२-४-१७) सू - <स नपुंसकम्> अर्थः – "समाहारे द्विगुः, द्वन्द्वश्च नपुंसकलिङ्गं स्यात्" इति। अतः नपूंसकता स्यात्। [*किन्तु, अपवादोऽपि अस्ति]
उदा – पञ्चानां पात्राणां समाहारः → पञ्चपात्रम् ।
पञ्चानां गवां समाहारः → पञ्चगवम्।
चतुर्णां युगानां समाहारः → चतुर्युगम् । तथा त्रिभुवनम् इत्यादीनि।

4. ** (२-४-२९ ) सू - <रात्राह्नाहाः पुंसि>
अर्थः – रात्र-अहन्- अहान्तशब्दाः द्वन्द्वसमासे, तत्पुरुषसमासे च पुंलिङ्गं प्राप्नुवन्ति।
उदा-
नवानां रात्रीणां समाहारः → नवरात्रः।
सप्तानाम् अह्नां समाहारः → सप्ताहः।
द्वयोः अह्नोः समाहारः → द्व्यहः। तथा त्र्यहः इत्यादीनि।

5. ** (४-१-२१) एतत् सूत्रं द्रष्टव्यम्।
** पुनः प्रश्नः :- अकारान्तरूपं किमर्थम्?
6. ** ( ) सू - <राजाहस्सखिभ्यष्टच्> = राजन्- अहन्- सखिन्-शब्दानां समासान्तत्वे अकारान्तप्रत्ययः भवति।

** प्रश्नः – अहन् शब्दः एकदेशिसमासे अह्नः इति भवति। अत्र द्विगुसमासे अहः इति रूपं भवति। तत् कथम्?
7. ** - ( ) सू - <अह्नोऽहः> इति सूत्रम्। तदनुसारम् अहः इत्यस्य अह्नादेशः भवति।

उदा – मध्याह्नः पूर्वाह्नः, अपराह्नः, इति अह्नादेशः ,पुंलिङ्गरूपं च भवति। अत्र सूत्रसोपानानि एवम्। ---

अहन् शब्दस्य → अह्नादेशः। [सू -<अह्नोऽहः>]

> मध्याह्नः, अपराह्णः, पूर्वाह्णः इत्यादीनि अकारान्ते एव भवन्ति। → [सू-<राजाहस्सखिभ्यष्टच्]

ते च पुंलिङ्गे एव , यतः [सू -<रात्राह्नाहाः पुंसि> निमित्तम्]

** परन्तु द्विगुसमासे ( ) सू - <न सङ्ख्यादेः समाहारे> इत्यस्य कारणात् अह्नादेशस्य निषेधः। अतः सप्ताहः, द्व्यहः इत्यादीनि अहः इति अन्तं प्राप्नुवन्ति।

** द्विगुसमासे रात्रिशब्दस्य अकारान्तम् एव भवति। (अधस्तनसूत्रस्य निमित्तम्)

8. ** ( ) सू - <सङ्ख्यापूर्वं रात्रं क्लीबम्> इति। अर्थः – सङ्ख्यापूर्वस्य रात्रिशब्दस्य नपुंसकम्। अतः नवरात्रम्, द्विरात्रम्, त्रिरात्रम्, पञ्चरात्रम् इत्यादीनि ।

*** द्विगुसमासाभावे (०अन्यत्र) शिवरात्रिः, शुभरात्रिः इत्यादीनि इकारान्ते एव भवन्ति।

** रात्रिशब्दं विहाय अन्ये केचन शब्दाः द्विगुसमासे स्त्रीलिङ्गत्वं प्राप्नुवन्ति। कथम्?

** ( ) वार्त्तिकम् – "अकारान्तोत्तरपदः द्विगुः स्त्रियाम्" । अर्थः = द्विगुसमासे अकारान्तपदानि स्त्रीलिङ्गरूपं प्राप्नुवन्ति।

उदा –

त्रयाणां लोकानां समाहारः → त्रिलोकी।

पञ्चानां वटानां समाहारः → पञ्चवटी।

9. ** वार्त्तिकम् – "पात्राद्यन्तस्य न" → पात्रादिगणशब्देषु नायं नियमः। अतः –

उदा – पञ्चानां पात्राणां समाहारः → पञ्चपात्रम्। तथा त्रिभुवनम्, चतुर्युगम् --- इत्यादीनि।

==========================================================

** द्विगुसमासे पुनः किञ्चित्।–

** (2-1-51) – सू - <तद्धितार्थोत्तरपदसमाहारे च > - सङ्ख्यावाचकं सुबन्तेन सह समस्यते।

१. तद्धितार्थविषये तद्धितार्थद्विगुः।
२. उत्तरपदे – उत्तरपदद्विगुः।
३. समाहारे वाच्ये वा – समाहारद्विगुः।

१, २, ३ इत्येतत् सर्वं पूर्वमेव विवृतम्। पुनः सङ्ग्रहेण किञ्चित्।

** समाहारद्विगुः -
पञ्चानां गवां समाहारः – पञ्चगवम्। [सू – <द्विगुरेकवचनम्>] द्विगुसमासः एकवचनान्तः इति समाहारद्विगुः एकवचनान्तः भवति।
[2-4-17)]- सू – <स नपुंसकम्> = 'समाहारे द्विगुः, (द्वन्द्वः च) नपुंसकं स्यात्'।

सोपानम्-१ – अतः सर्वत्र नपुंसकता प्राप्ता। - तथा पञ्चपात्रम्, त्रिभुवनम्,चतुर्युगम् इत्यादीनि।

** परन्तु – 'अहन्'-शब्दः पुंलिङ्गः स्यात्।– सप्तानाम् अह्नां समाहारः – सप्ताहः।– कारणम् – सू -<रात्राह्नाहाः पुंसि>

**- अस्य उदाहरणानि – सप्ताहः, द्व्यहः--। सर्वरात्रः, पूर्वरात्रः, पुण्यरात्रः-

** परन्तु सू – (2-4-21) <सङ्ख्यापूर्वं रात्रं क्लीबम्> - एतेन त्रिरात्रम्, नवरात्रम्, पञ्चरात्रम् ।

** (5-4-99) सू - <नावो द्विगुः> - एतेन उदा – तिसृणां नावां समाहारः – त्रिनावम्। भिन्नं सूत्रम् (5-4-120) <अर्धाच्च>

किन्तु पुनः त्रयाणां लोकानां समाहारः – त्रिलोकी -इति स्त्रीलिङ्गशब्दः। कारणम् – वार्त्तिकम् – "अकारान्तोत्तरपदो द्विगुः स्त्रियाम् इष्टः" ।

अतः पञ्चवटी, त्रिलोकी, अष्टाध्यायी, इत्यादीनि।

** पुनः पञ्चानां पात्राणां समाहारः – पञ्चपात्रम्। कारणम् – वार्त्तिकम् – "पात्राद्यन्तस्य न" - इति निषेधः। {अतः पात्रादिगणे ये शब्दाः सन्ति, तेषां स्त्रीलिङ्गत्वं न।

अतः पञ्चपात्रम्, चतुर्युगम्, त्रिभुवनम् इत्यादयः।

** रात्रि-शब्देन द्विगोः सन्दर्भे अकारान्तः प्राप्तः चेदपि रात्रम्- इति नपुंसकता एव, <सङ्ख्यापूर्वं क्लीबम्> इत्यनेन सूत्रेण।

==========================================================

नञ्-प्रभृतयः।

** (२-२-६) सू- <नञ्> अर्थः = "नञ्" समर्थेन सुबन्तेन समस्यते, 'नञ्'-तत्पुरुषसमासः भवति।

["नञ्"= न। समासप्रक्रियायां तस्य न्-लोपः, अकारः अवशिष्टो भवति।

उदा – न ब्राह्मणः → अब्राह्मणः। = (न् +अ) ब्राह्मणः – 'न्' इत्यस्य लोपो भवति, अतः अब्राह्मणः इति समस्तपदम्।

[अर्थः – रूपे एव ब्राह्मणसदृशः, न तु आचारे]

न धर्मः → अधर्मः। न ज्ञानम् -> अज्ञानम्। [अभावः]

न पटः → अपटः । [भेदः, व्यत्यासः]

अनुदरा [अल्पता],

*** 'नञ्' अनन्तरं स्वरादिशब्दाः भवन्ति चेत् 'न्'-लोपः, अकारात् परं पुनः नुडागमः भूत्वा 'अन्' इति।

उदा :- न आदरः → अनादरः। 'न्'(लोपः)+अ + आदरः → अ+न्(आगमः) + आदरः = अनादरः।

न उपलब्धिः → अनुपलब्धिः। न उचितम् → अनुचितम्।

न औचित्यम् → अनौचित्यम्। न ऋणम् → अनृणम्।

** नञ् -भिन्नम्, 'न्' भिन्नम्। किन्तु समानार्थकपदद्वयम्।

'नञ्' इत्यस्य एव 'न्' लोपः, समासश्च। तत्रापि 'न' इत्येव व्यवहारः।

*** किन्तु [न+ एकधा ] इत्यत्र समासः भवति चेदपि लोपः न। तत्र सन्धिरूपेण 'नैकधा ' इति रूपम्।

कुसमासः

याज्ञिककितवः – यः अनर्हाणां यज्ञे भागं स्वीकृत्य द्यूतमाचरति सः]

मीमांसकदुर्दुरूढः -[नास्तिकः]

गतिसमासः

प्रादिसमासः

उपपदसमासः

** (२-२-१७) सू - <उपपदमतिङ्> अर्थः = उपपदम् अतिङ्। समासः तिङन्तघटिको नास्ति। अतः अतिङन्तोऽयं समासः।

विवरणम् – उपपदम् अतिङन्तं समर्थेन शब्दान्तरेण सुबन्तेन सह समस्यते, ।

** अत्र (२-२-१९) सू - <गतिकारकोपपदानां कृद्भिस्सह समासवचनं प्राक् सुबुत्पत्तेः> इति परिभाषायाः प्रभावः मुख्यः। अर्थात् – गति-कारक-उपपदानां संयोगः, धातोः कृदन्तत्वस्य परिणामात् परं, समासत्वं प्राप्नोति। अर्थात्, गति-कारक-उपपदसूचकपदानां समासः कृत्-प्रत्ययसहितेन सुबन्तेन सहैव वर्तते, तत्परमेव सुबुत्पत्तिः।

उदा – कुम्भं करोति इति कुम्भकारः। →अत्र कृ-धातोः 'कार' इति कृदन्तत्वात् परं सुप्-संयोगः भवति।

नगरं करोतीति नगरकारः।

१, समीपस्थं पदम् -उपपदम्। पदात् पूर्वमुक्तं / संयुक्तं पदम् – उपपदम्।

२. नाम्ना सह संयुक्तं गौरवपदम् – पदवीपदम्।

३. सूत्रेषु सप्तम्यर्थे व्यक्तं पदम्।

** कुम्भं करोति – इत्यत्र "कुम्भम्" इति पदं कर्मण्यर्थं सूचयति। अस्य उपपदसंज्ञा भवति।एतेषाम् उपपदानां कृदन्तसहितार्थबोधकः समासः उपपदसमासः इत्युच्यते।

** कृदन्तस्यापि प्रातिपदिकरूपे एव समासः भवति। अतः - कुम्भ समासः कृत्'+कृ+('कृत्'प्रत्ययः) कार = कुम्भकार + सुप् = कुम्भकारः।

-<गतिकारकोपपदानां कृद्भिस्सह समासवचनं प्राक् सुबुत्पत्तेः>, अर्थः = गति –" कारक-उपपदसूचकपदानां समासः 'कृत्" -प्रत्ययसहितपदेन सहैव वर्तते। अनन्तरं सुबुत्पत्तिः।

[3-2-1] सू - <कर्मण्यण्>? (कर्मणि इति अण्) - अत्र अलौकिकविग्रहः – (कुम्भ+अम्, कृ+अण्)

अर्थः = सर्वत्र कर्मणि उपपदे। [कर्मपदस्य उपपदसंज्ञा भवति। पुनः, यत्र कर्मै उपपदसंज्ञा अस्ति, तत्र धातोः अनन्तरम् 'अण्'-प्रत्ययः आगच्छति।

वार्त्तिकम् – "शीलिकाभिभक्ष्याचरिभ्यो 'णः' पूर्वपद-प्रकृतिस्वरत्वं वक्तव्यम्।

वार्त्तिकम् - "ईक्षिक्षमिभ्यां चेति वक्तव्यम्"।

उदा- कुम्भकारः (potter), नगरकारः = city builder, काण्डलावः = branch cutter, शरलावः = reed cutter.

*** - (3-2-3) सू - <आतोऽनुपसर्गे कः>, अर्थः = आतः, अनुपसर्गे,कः (कर्मणि इति अनुवर्तितव्यम्)।

अर्थः = (वृत्तिः) – आकारान्तेभ्यः धातुभ्यः अनुपसर्गेभ्यः कर्मणि-उपपदे 'क्'-प्रत्ययः भवति। - अयम् 'अण्"-प्रत्ययस्य अपवादः।

उदा- गां ददाति = गाम् + आ = [गो + दा] = गो+द +अ = गोदः।

कम्बलं ददाति। = कम्बलदः । जानं ददातीति – ज्ञानदः / ज्ञानदा। वरं ददातिति – वरदः / वरदा।

*** - (3-2-4) सू - <सुपि स्थः> = सुपि, स्थः।

वृत्तिः – सुबन्तोपपदे 'स्था'-धातोः (तिष्ठतेः) 'क'-प्रत्ययः भवति।

उदा – गृहे तिष्ठतीति गृहस्थः। विषमे तिष्ठतीति विषमस्थः। नगरे तिष्ठतीति नगरस्थः।

*** - (3-2-6) सू - <प्रेदा ज्ञः> + (कर्मणि कः)  प्रे, दा, ज्ञः।

अर्थः – ददातेः, जानातेः च धातोः प्रेज्ञोपपदात् कर्मण्युपपदे कप्-प्रत्ययः भवति।

उदा – जलाः, तोयदः, सुखदः ---।

संस्कृतं जानातीति संस्कृतज्ञः। सर्वं जानातिति सर्वज्ञः। अल्पं जानातीति अल्पज्ञः, तन्त्रज्ञः इत्यादीनि।

** सोपसर्गधातोरपि 'कप्'-प्रत्ययः भवति।

उदा – (१) सर्वं प्रददाति इति सर्वप्रदः। (२) फलं प्रददातीति फलप्रदः। [This debars the use of 'अण्' – अनुपसर्गे'।

*** - (7-2-115) सू - <अचो ञ्-णिति>. = अचः ञ्, णिति,

वृत्तिः। = अजन्ताङ्गस्य ञिति, णिति च वृद्धिः भवति। ( Before the pratyaya, वृद्धि -is substituted for end vowel of the stem.

उदा – कारः, हारः, पाचकः, गायकः।

==========================================================================================

उपपदसमासे इतोऽपि कानिचन विशेषविवरणानि।→

[2-2-19]  सू – <उपपदमतिङ्>   *अर्थः = अ-तिङन्तश्चायं समासः। (समासः तिङन्तघटितः नास्ति), - उपपदम् अतिङन्तं समर्थेन सुबन्तेन समस्यते।

[3-2-1] सू - <कर्मण्यण्>  = (कर्मणि अण्) - अत्र अलौकिकविग्रहः – (कुम्भ+अम्, कृ+अण्)

[7-2-115] – सू - <अचो ञ्णिति> इति वृद्धौ ।

[3-1-92] – सू - <तत्रोपपदं समीपस्थम्> इति कुम्भपदस्य उपपदसंज्ञा।

**<धातोः> इति अधिकारसूत्रम् अनुवर्त्यते।  अर्थः – अत्र अष्टाध्यायी-तृतीयाध्याये  यत् सप्तमीनिर्दिष्टं, तत् उपसंज्ञं भवति।  The word implied in सप्तमी is called उपपदम्।

**[3-2-1] – सू - <कर्मण्यण्> । (अर्थः) – सर्वत्र कर्मणि उपपदे। = सर्वत्र कर्मपदस्य उपपदसंज्ञा भवति। तस्य उपपदसंज्ञायुक्तकर्मपदस्य 'अण्'-प्रत्ययः भवति। स तु धातोः अनन्तरम् आगच्छति।

-<गतिकारकोपपदानां कृद्भिस्सह समासवचनं प्राक् सुबुत्पत्तेः

[1-4-60] -  सू - <गतिश्च>